॥ श्री ॥
अथ श्री त्रिविक्रमपंडिताचार्यसुत श्री नारायणपंडिताचार्यविरचित:
॥ श्री मध्वविजय: ॥
१. प्रथम: सर्ग:
कांताय कल्याणगुणैकधाम्ने नवद्युनाथप्रतिमप्रभाय ।
नारायणायाखिलकारणाय श्रीप्राणनाथाय नमस्करोमि ॥ १.१ ॥
अनाकुलं गोकुलमुल्ललास यत्पालितं नित्यमनाविलात्म ।
तस्मै नमो नीरदनीलभासे कृष्णाय कृष्णारमणप्रियाय ॥ १.२ ॥
अपि त्रिलोक्या बहिरुल्लसंती तमो हरंती मुहुरांतरं च ।
दिश्याद् दृशं नो विशदां जयंती मध्वस्य कीर्तिर्दिननाथदीप्तिम् ॥ १.३ ॥
तमोनुदाऽऽनंदमवाप लोक: तत्वप्रदीपाकृतिगोगणेन ।
यदास्यशीतांशुभुवा गुरूंस्तान् त्रिविक्रमार्यान् प्रणमामि वर्यान् ॥ १.४ ॥
मुकुंदभक्त्यै गुरुभक्तिजायै सतां प्रसत्त्यै च निरंतरायै ।
गरीयसीं विश्वगुरोर्विशुद्धां वक्ष्यामि वायोरवतारलीलाम् ॥ १.५ ॥
तां मंत्रवर्णैरनुवर्णनीयां शर्वेंद्रपूर्वैरपि वक्तुकामे ।
संक्षिप्नुवाक्ये मयि मंदबुद्धौ संतो गुणाढ्या: करुणां क्रियासु: ॥ १.६ ॥
उच्चावचा येन समस्तचेष्टा: किं तत्र चित्रं चरितं निवेद्यं ।
किंतूत्तमश्लोकशिखामणीनां मनोविशुद्ध्यै चरितानुवाद: ॥ १.७ ॥
मालाकृतस्तच्चरिताख्यरत्नै: असूक्ष्मदृष्टे: सकुतूहलस्य ।
पूर्वापरीकारमथापरं वा क्षाम्यंतु मे हंत मुहुर्महांत: ॥ १.८ ॥
श्रीवल्लभाज्ञां ससुरेंद्रयाज्ञां संभाव्य संभाव्यतमां त्रिलोक्याम् ।
प्राणेश्वर: प्राणिगणप्रणेता गुरु: सतां केसरिणो गृहेऽभूत् ॥ १.९ ॥
येये गुणा नाम जगत्प्रसिद्धा: यं तेषु तेषु स्म निदर्शयंति ।
साक्षान्महाभागवतप्रबर्हं श्रीमंतमेनं हनुमंतमाहु: ॥ १.१० ॥
कर्माणि कुर्वन् परमाद्भुतानि सभासु दैवीषु सभाजितानि ।
सुग्रीवमित्रं स जगत्पवित्रं रमापतिं रामतनुं ददर्श ॥ १.११ ॥
पादारविंदप्रणतो हरींद्र: तदा महाभक्तिभराभिनुन्न: ।
अग्राहि पद्मोदरसुंदराभ्यां दोर्भ्यां पुराणेन स पूरुषेण ॥ १.१२ ॥
अदार्यसालावलिदारणेन व्यापादितेंद्रप्रभवेन तेन ।
प्राद्योतनिप्रीतिकृता निकामं मधुद्विषा संदिदिशे स वीर: ॥ १.१३ ॥
कर्णांतमानीय गुणग्रहीत्रा रामेण मुक्तो रणकोविदेन ।

स्फुरन्नसौ वैरिभयंकरोऽभूत् सत्पक्षपाती प्रदरो यथाऽग्र्यः ॥ १.१४ ॥
गोभिः समानंदितरूपसीतः स्ववह्निनिर्दग्धपलाशिराशिः ।
अहो हनूमन्नववारिदोऽसौ तीर्णांबुधिर्विष्णुपदे ननाम ॥ १.१५ ॥
अपक्षपाती पुरुषस्त्रिलोक्यां अभोगभोक्ता पतगाधिराजम् ।
विश्वंभरं बिभ्रदसौ जिगाय त्वरापराक्रांतिषु चित्रमेतत् ॥ १.१६ ॥
निबद्ध्य सेतुं रघुवंशकेतुभ्रूभंगसंभ्रांतपयोधिमध्ये ।
मुष्टिप्रहारं दशकाय सीतासंतर्जनाग्र्योत्तरमेषकोऽदात् ॥ १.१७ ॥
जाज्वल्यमानोज्ज्वलराघवाग्नौ चक्रे स सुग्रीवसुयायजूके ।
आध्वर्यवं युद्धमखे प्रतिप्रस्थात्रा सुमित्रातनयेन साकम् ॥ १.१८ ॥
रामार्चने यो नयतः प्रसूनं द्वाभ्यां कराभ्यामभवत् प्रयत्नः ।
ऐकेन दोष्णा नयतो गिरींद्रं संजीवनाद्याश्रयमस्य नाभूत् ॥ १.१९ ॥
स दारितारिं परमं पुमांसं समन्वयासीन्नरदेवपुत्र्या ।
वह्निप्रवेशाधिगतात्मशुद्ध्या विराजितं कांचनमालयेव ॥ १.२० ॥
श्यामं स्मितास्यं पृथुदीर्घहस्तं सरोजनेत्रं गजराजयात्रम् ।
वपुर्जगन्मंगलमेष दृग्भ्यां चिरादयोध्याधिपतेः सिषेवे ॥ १.२१ ॥
राज्याभिषेकेऽवसितेऽत्र सीता प्रेष्ठाय नस्तां भजतां दिशेति ।
रामस्य वाण्या मणि मंजुमालाव्याजेन दीर्घां करुणां बबंध ॥ १.२२ ॥
हृदोरुसौहार्दभृताऽधिमौलि न्यस्तेन हस्तेन दयार्द्र दृष्ट्या ।
सेवाप्रसन्नोऽमृतकल्पवाचा दिदेश रामः सहभोगमस्मै ॥ १.२३ ॥
प्रेष्ठो न रामस्य बभूव तस्मात् न रामराज्येऽसुलभं च किंचित् ।
तत्पादसेवारतिरेष नैच्छत् तथाऽपि भोगान् ननु सा विरक्तिः ॥ १.२४ ॥
नमो नमो नाथ नमोनमस्ते नमो नमो राम नमो नमस्ते ।
पुनःपुनस्ते चरणारविंदं नमामि नाथेति नमन् स रेमे ॥ १.२५ ॥
किं वर्णयामः परमं प्रसादं सीतापतेस्तत्र हरिप्रबर्हे ।
मुंचन् महीं नित्यनिषेवणार्थं स्वात्मानमेवैष ददौ यदस्मै ॥ १.२६ ॥
स्वानंदहेतौ भजतां जनानां मग्नः सदा रामकथासुधायाम् ।
असाविदानीं च निषेवमणो रामं पतिं किंपुरुषे किलाऽस्ते ॥ १.२७ ॥
तस्यैव वायोरवतारमेनं संतो द्वितीयं प्रवदंति भीमम् ।
स्पृष्टैव यं प्रीतिमताऽनिलेन नरेंद्रकांता सुषुवेऽत्र कुंती ॥ १.२८ ॥
इंद्रायुधं हींद्रकराभिनुन्नं चिच्छेद पक्षान् क्षितिधारिणां प्राक् ।
बिभेद भूभृद्वपुरंगसंगात् चित्रं स पन्नो जननीकराग्रात् ॥ १.२९ ॥

पुरे कुमारानलसान् विहारात् निरीक्ष्य सर्वानपि मंदलीलः ।
कैशोरलीलां हतसिंहसंघां वृत्तां वने प्राक् स्मरति स्म सूत्कः ॥ १.३० ॥
भुक्तं च जीर्णं परिपंथिदत्तं विषं विषण्णो विषभृद्गणोऽतः ।
प्रमाणकोटेः स हि हेळयाऽगात् नेदं जगज्जीवनदेऽत्र चित्रम् ॥ १.३१ ॥
दग्ध्वा पुरं योगबलात् स निर्यन् धर्मानिव स्वान् सहजान् दधानः ।
अदारिभावेन जगत्सु पूज्यो योगीव नारायणमाससाद ॥ १.३२ ॥
समर्प्य कृत्यानि कृती कृतानि व्यासाय भूम्ने सुकृतानि यावत् ।
करिष्यमाणानि च तस्य पूजां संकल्पयामास स शुद्धबुद्धिः ॥ १.३३ ॥
विष्णोःपदश्रिद् बकसन्निरासी क्षिप्तान्यपक्षिप्रकरः सुपक्षः ।
ससोदरोऽथाऽदित राजहंसः स राजहंसीमिव राजकन्याम् ॥ १.३४ ॥
इंदीवरश्रीजयिसुंदराभं स्मेराननेंदुं दयितं मुकुंदम् ।
स्वमातुलेयं कमलायताक्षं समभ्यनंदत् सुचिराय भीमः ॥ १.३५ ॥
महागदं चंडरणं पृथिव्यां बार्हद्रथं मंक्षु निरस्य वीरः ।
राजानमत्युज्ज्वलराजसूयं चकार गोविंदसुरेंद्रजाभ्याम् ॥ १.३६ ॥
दुःशासनेनाऽकुलितान् प्रियायाः सूक्ष्मानराळानसितांश्च केशान् ।
जिघांसया वैरिजनस्य तीक्ष्णः स कृष्णसर्पानिव संचिकाय ॥ १.३७ ॥
जाज्वल्यमानस्य वने वनेऽलं दिधक्षतः पार्थिवसार्थमुग्रम् ।
सत्त्वानि पुंसां भयदानि नाशं वृकोदराग्नेर्गुरुतेजसाऽऽपुः ॥ १.३८ ॥
भोगाधिकाभोगवतोऽरुणाक्षान् इतस्ततः संवलतो धरेंद्रे ।
बहून् द्विजिह्वान् मणिमत्पुरोगान् असौ कटून् क्रोधवशान् जघान ॥ १.३९ ॥
अथैष वेषांतरभस्मलीनः क्रमेण वायुप्रभवः सुतेजाः ।
रुद्धाखिलाशं मुखरं प्रचंडं भस्मीचकाराखिलकीचकौघम् ॥ १.४० ॥
स कृष्णवर्त्मा विजयेन युक्तो मुहुर्महाहेतिधरोऽप्रधृष्यः ।
भीष्मद्विजाद्यैरतिभीषणाभं विपक्षकक्षं क्षपयन् विरेजे ॥ १.४१ ॥
तरस्विनः प्रोच्चलितानधीरान् निर्दग्धपक्षानतितीक्ष्णकोपान् ।
स धार्तराष्ट्रान् बहुहेतिलीलो विनाश्य विश्वान् परया श्रियाऽभात् ॥ १.४२ ॥
कृष्णांघ्रिपंकेरुहभृंगराजः कृष्णामुखांभोरुहहंसराजः ।
प्रजासरोजावलिरश्मिराजः ससोदरोऽराजत वीरराजः ॥ १.४३ ॥
पौत्रे पवित्राह्वयजामिपौत्रे धरां निधायासुरधीषु तापम् ।
कीर्तिं त्रिलोक्यां हृदयं मुकुंदे भेजे पदं स्वं सहजैः स भीमः ॥ १.४४ ॥
विष्णोः पदांतं भजताऽनिलेन घोरप्रघातैरिति नाशितास्ते ।

रसोज्झिताश्चंचलवृत्तयोऽलं शोभां न भेजुः सुरवैरिमेघाः ॥ १.४५ ॥
एतत्प्रतीपं किल कर्तुकामाः नष्टौजसः संकटमेवमाप्य ।
मुकुंदवैगुण्यकथां स्वयोग्यां काले कलावाकलयंत तेऽलम् ॥ १.४६ ॥
यो भूरिवैरो मणिमान् मृतः प्राग् वाग्मी बुभूषुः परितोषितेशः ।
स संकराख्योऽंघ्रि तळेषु जज्ञे स्पृधा परेऽप्यासुरिहासुरेंद्राः ॥ १.४७ ॥
सान्नाय्यमव्यक्तहृदाखुभुग् वा श्वा वा पुरोडाशमसारकामः ।
मणिस्रजं वा प्लवगोऽव्यवस्थो जग्राह वेदादिकमेष पापः ॥ १.४८ ॥
जनो नमेन्नापरथेति मत्वा शठश्चतुर्थाश्रममेष भेजे ।
पद्माकरं वा कलुषीचिकीर्षुः सुदुर्दमो दुष्टगजो विशुद्धम् ॥ १.४९ ॥
अवैदिकं माध्यमिकं निरस्तं निरीक्ष्य तत्पक्षसुपक्षपाती ।
तमेव पक्षं प्रतिपादुकोऽसौ न्यरूरुपन्मार्गमिहानुरूपम् ॥ १.५० ॥
असत्पदेऽसन् सदसद्विविक्तं मायाख्यया संवृतिमभ्यधत्त ।
ब्रह्माप्यखंडं बत शून्यसिद्ध्यै प्रच्छन्नबौद्धोऽयमतः प्रसिद्धः ॥ १.५१ ॥
यद् ब्रह्मसूत्रोत्करभास्करं च प्रकाशयंतं सकलं स्वगोभिः ।
अचूचुरद् वेदसमूहवाहं ततो महातस्करमेनमाहुः ॥ १.५२ ॥
स्वसूत्रजातस्य विरुद्धभाषी तद्भाष्यकारोऽहमिति ब्रुवन् यः ।
तं तत्क्षणाद् यो न दिधक्षति स्म स व्यासरूपो भगवान् क्षमाब्धिः ॥ १.५३ ॥
निगमसन्मणिदीपगणोऽभवत् तदुरुवाग्गणपंकनिगूढभाः ।
अविदुषामिति संकरताकरः स किल संकर इत्यभिशुश्रुवे ॥ १.५४ ॥
विश्वं मिथ्या विभुरगुणवानात्मनां नास्ति भेदो ।
दैत्या इत्थं व्यदधत गिरां दिक्षु भूयः प्रसिद्धिम् ॥
आनंदाद्यैर्गुरुगुणगणैः पूरितो वासुदेवो ।
मंदंमंदं मनसि च सतां हंत नूनं तिरोऽभूत् ॥ १.५५ ॥
॥ इति श्रीमत्कविकुलतिलक त्रिविक्रमपंडिताचार्यसुत नारायणपंडिताचार्यविरचिते
श्रीमध्वविजये
आनंदांकिते प्रथमः सर्गः ॥